# श्रीहनुमत्स्तवः

कन्दर्पकोटिलावण्यं सर्वविद्याविशारदम् ।
उद्यदादित्यसङ्काशमुदारभुजविक्रमम् ॥ १॥

श्रीरामहृदयानन्दं भक्तकल्पमहीरुहम् ।
अभयं वरदं दोर्भ्यां कलये मारुतात्मजम् ॥ २॥

वामहस्तं महाकृत्स्नं दशास्यशिरखण्डनम् ।
उद्यद्दक्षिणदोर्दण्डं हनूमन्तं विचिन्तयेत् ॥ ३॥

बालार्कायुततेजसं त्रिभुवनप्रक्षोभकं सुन्दरं
सुग्रीवाद्यखिलप्लवङ्गनिकरैराराधितं साञ्जलिम् ।
नादेनैव समस्तराक्षसगणान् सन्त्रासयन्तं प्रभुं
श्रीमद्रामपदाम्बुजस्मृतिरतं ध्यायामि वातात्मजम् ॥ ४॥

आमिषीकृतमार्ताण्डं गोष्पदीकृतसागरम् ।
तृणीकृतदशग्रीवमाञ्जनेयं नमाम्यहम् ॥ ५॥

चित्ते मे पूर्णबोधोऽस्तु वाचि मे भातु भारती ।
क्रियासुर्गुरवः सर्वे दयां मयि दयालवः ॥ ६॥


# श्रीहनुमत्स्तवः


सद्गुरुश्रीत्यागराजस्वामिनः शिष्यया भक्तया पुष्पया कृतः

ॐ

श्रीरामजयम् ।

ॐ सद्गुरुश्रीत्यागराजस्वामिने नमो नमः ।

ॐ आञ्जनेयाय विद्महे । रामदूताय धीमहि ।
तन्नो यजः प्रचोदयात् ॥

पवमानसुतं वीरं बलिष्ठं बलदायकम् ।
पाथोधितारणं भीमं हनुमन्तं नमाम्यहम् ॥ १॥

अणिमाद्यष्टसिद्धिं च आरोग्यबुद्धिदायिनम् ।
असमानप्रभावं तं आञ्जनेयं नमाम्यहम् ॥ २॥

अवरं वरभक्ताग्रं प्राञ्जलिप्रार्थनावरम् ।
वररागलयज्ञं तं मरुज्जातं नमाम्यहम् ॥ ३॥

रामभक्तिमुदाप्लावं भक्तिसागरपारगम् ।
नामध्यानसमाधिं तं मारुतिं प्रणमाम्यहम् ॥ ४॥

सीतारामहत्प्रेष्ठं सीताहृच्छिद्रशामनम् ।
सीतारामपरानिष्ठं महावीरं नमाम्यहम् ॥ ५॥

वाक्सौष्ठवातिनैपुण्यं महामेधाविलासिनम् ।
वाक्शब्दस्वरमाधुर्यं वातात्मजं नमाम्यहम् ॥ ६॥

गीतसुस्वरसानन्दं आनन्दबाष्पकण्ठिनम् ।
अतिमाधुर्यगायन्तं वायुपुत्रं नमाम्यहम् ॥ ७॥

रामनामफलाशं तं नामकीर्तनतन्मयम् ।
त्यागराजकृतिप्रीतं रामभक्तं नमाम्यहम् ॥ ८॥

नवव्याकरणाभिज्ञं तत्त्वसुज्ञानपण्डितम् ।

नवैतन्नुतिसान्निध्यं नमस्कर्यं प्रणौम्यहम् ॥ ९॥

त्यागराजगुरुस्वामिशिष्यापुष्पाकृपाकरम् ।
कष्टाधिवारणं वन्दे इष्टेष्टिसिद्धिपूरणम् ॥ १०॥

वानरश्रेष्ठरत्नं तं रामभक्तिरसार्णवम् ।
पाठितश्लोकसङ्गीतं परमानन्दमङ्गलम् ॥ ११॥

मङ्गलं रामदूताय कपीशाय सुमङ्गलम् ।
मङ्गलं भक्तिवन्द्याय आञ्जनेयाय मङ्गलम् ॥ १२॥

इति सद्गुरुश्रीत्यागराजस्वामिनः शिष्यया भक्तया पुष्पया कृतः
श्रीहनुमत्स्तवः गुरौ समर्पितः ।
ॐ शुभमस्तु ।

# श्रीहनुमत्स्तवराजः

श्रीपराशरसंहिता अन्तर्गत

श्रीपराशर उवाच
अन्यत्स्तोत्रं प्रवक्ष्यामि शृणु मैत्रेय योगिराट् ।
स्त्वराजमिति ख्यातं त्रिषु लोकेषु दुर्लभम् ॥

शम्भुना चोपदिष्टं च पार्वत्यै हितकाम्यया ।
सर्वकामप्रदं नृणां भुक्तिमुक्तिफलप्रदम् ॥

अस्य श्रीहनुमत् स्तवराजस्तोत्रमन्त्रस्य वशिष्ठ भगवान् ऋषिः ।
अनुष्टुप्छन्दः । श्रीहनुमान् देवता । ह्रां बीजम् । ह्रीं शक्तिः ।

ह्रूं कीलकम् । मम श्रीहनुमत्प्रसादसिध्यर्थे जपे विनियोगः ॥

अथ ऋष्यादिन्यासः ।

श्रीवशिष्ठभगवान् ऋषये नमः शिरसि ।

अनुष्टुप्छन्दसे नमः मुखे ।

श्रीहनुमान् देवतायै नमः हृदि ।

ह्रां बीजाय नमः गुह्ये ।

ह्रीं शक्तये नमः पादयोः ।

ह्रूं कीलकाय नमः नाभौ ।

मम श्रीहनुमत्प्रसादसिध्यर्थे इति विनियोगाय नमः सर्वाङ्गे ॥

इति ऋष्यादिन्यासः ॥

अथ करन्यासः ।

ॐ अञ्जनीसुताय अङ्गुष्ठाभ्यां नमः ।

ॐ रुद्रमूर्तये तर्जनीभ्यां नमः ।

ॐ वायुपुत्राय मध्यमाभ्यां नमः ।

ॐ अग्निगर्भाय अनामिकाभ्यां नमः ।

ॐ रामदूताय कनिष्ठिकाभ्यां नमः ।

ॐ पञ्चमुखहनुमते करतलकरपृष्ठाभ्यां नमः ।

इति करन्यासः ।

अथ षडङ्गन्यासः ।

ॐ अञ्जनीसुताय हृदयाय नमः ।

ॐ रुद्रमूर्तये शिरसे स्वाहा ।

ॐ वायुपुत्राय शिखायै वषट् ।

ॐ अग्निगर्भाय कवचाय हुम् ।

ॐ रामदूताय नेत्रत्रयाय वौषट् ।

ॐ पञ्चमुखहनुमते अस्त्राय फट् ।

इति षडङ्गन्यासः ॥

अथ ध्यानम् ।

उद्यन्मार्ताण्डकोटिप्रकटरुचिकरं चारु वीरासनस्थं

मौञ्जीयज्ञोपवीताभरणमुरुशिखाशोभितं कुण्डलाङ्गम् ।

भक्तानामिष्टदं तं प्रणुत मुनिजनं वेदनादप्रमोदं

ध्यायेद्देवं विधेयं प्लवगकुलपतिं गोष्पदीभूतवार्धिम् ॥

इति ध्यानम् ॥

श्रीहनुमान्महावीरो वीरभद्रवरोत्तमः ।

वीरश्शक्तिमतां श्रेष्ठो वीरेश्वरवरप्रदः ॥ १॥

यशस्करः प्रतापाढयो सर्वमङ्गल सिद्धिदः ।

सानन्दमूर्तिर्गहनो गम्भीरस्सुरपूजितः ॥ २॥

दिव्यकुण्डलभूषाय दिव्यालङ्कारशोभिने ।

पीताम्बरधरप्राज्ञ नमस्ते ब्रह्मचारिणे ॥ ३॥

कौपीनवसनाक्रान्त दिव्ययज्ञोपवीतिने ।

कुमाराय प्रसन्नाय नमस्ते मौञ्जीधारिणे ॥ ४॥

सुभद्रश्शुभदाता च सुभगो रामसेवकः ।

यशःप्रदो महातेजा बलाढ्यो वायुनन्दनः ॥ ५॥

जितेन्द्रियो महाबाहुर्वज्रदेहो नखायुधः ।

सुराध्यक्षो महाधुर्यः पावनः पवनात्मजः ॥ ६॥

बन्धमोक्षकरश्शीघ्रपर्वतोत्पाटनस्तथा ।
दारिद्र्यभञ्जनश्श्रेष्ठस्सुखभोगप्रदायकः ॥ ७॥

वायुजातो महातेजाः सूर्यकोटिसमप्रभः ।
सुप्रभा दीप्तिमद्भूत दिव्यतेजस्विने नमः ॥ ८॥

अभयङ्करमुद्राय अपमृत्युविनाशिने ।
सङ्ग्रामे जयदात्रे च अविघ्नाय नमोनमः ॥ ९॥

तत्त्वज्ञानामृतानन्दब्रह्मज्ञो ज्ञानपारगः ।
मेघनादप्रमोहाय हनुमद्ब्रह्मणे नमः ॥ १०॥

रुच्याढ्यदीप्तबालार्कदिव्यरूपशुशोभितः ।
प्रसन्नवदन श्रेष्ठ हनुमन् ते नमो नमः ॥ ११॥

दुष्टग्रहविनाशश्च दैत्यदानवभञ्जनः ।
शाकिन्यादिभूतहन्त्रे नमोऽस्तु श्रीहनूमते ॥ १२॥ शाकिन्यादिषु भूतघ्नो
महाधैर्य महाशौर्य महावीर्य महाबल ।
अमेयविक्रमायैव हनुमन् वै नमोऽस्तुते ॥ १३॥

दशग्रीवकृतान्ताय रक्षःकुलविनाशिने ।
ब्रह्मचर्यव्रतस्थाय महावीराय ते नमः ॥ १४॥

भैरवाय महोग्राय भीमविक्रमणाय च ।
सर्वज्वरविनाशाय कालरूपाय ते नमः ॥ १५॥

सुभद्रद सुवर्णाङ्ग सुमङ्गल शुभङ्कर ।
महाविक्रम सत्वाढ्य दिङ्मण्डलसुशोभित ॥ १६॥

पवित्राय कपीन्द्राय नमस्ते पापहारिणे ।

सुविद्यरामदूताय कपिवीराय ते नमः ॥ १७॥

तेजस्वी शत्रुहावीरः वायुजस्सम्प्रभावनः ।

सुन्दरो बलवान् शान्तः आञ्जनेय नमोऽस्तु ते ॥ १८॥

रामानन्द जयकर जानकीश्वासद प्रभो ।

विष्णुभक्त महाप्राज्ञ पिङ्गाक्ष विजयप्रद ॥ १९॥

राज्यप्रदस्सुमाङ्गल्यः सुभगो बुद्धिवर्धनः ।

सर्वसम्पत्तिदात्रे च दिव्यतेजस्विने नमः ॥ २०॥

कल्याणकीर्तये जयमङ्गलाय जगत्तृतीयं धवलीकृताय ।

तेजस्विने दीप्तदिवाकराय नमोऽस्तु दीप्ताय हरीश्वराय ॥ २१॥

महाप्रतापाय विवर्धनाय मनोजवायाद्भूतवर्धनाय ।

प्रौढप्रतापारुणलोचनाय नमोऽञ्जनानन्द कपीश्वराय ॥ २२॥

कालाग्निदैत्यसंहर्ता सर्वशत्रुविनाशनः ।

अचलोद्धारकश्चैव सर्वमङ्गलकीर्तिदः ॥ २३॥

बलोत्कटो महाभीमः भैरवोऽमितविक्रमः ।

तेजोनिधिः कपिश्रेष्ठः सर्वारिष्टार्तिदुःखहा ॥ २४॥

उदधिक्रमणश्चैव लङ्कापुरविदाहकः ।

सुभुजो द्विभूजो रुद्रः पूर्णप्रज्ञोऽनिलात्मजः ॥ २५॥

राजवश्यकरश्चैव जनवश्यं तथैव च ।

सर्ववश्यं सभावश्यं नमस्ते मारुतात्मज ॥ २६॥

महापराक्रमाक्रान्तः यक्षराक्षसमर्दनः ।
सौमित्रिप्राणदाता च सीताशोकविनाशनः ॥ २७॥

रक्षोघ्नोऽञ्जनासूनुश्च केसरीप्रियनन्दन ।
सर्वार्थदायको वीरः मल्लवैरिविनाशनः ॥ २८॥

सुमुखाय सुरेशाय शुभदाय शुभात्मने ।
प्रभावाय सुभावाय नमस्तेऽमिततेजसे ॥ २९॥

वायुजो वायुपुत्रश्च कपीन्द्रः पवनात्मजः ।
वीरश्रेष्ठ महावीर शिवभद्र नमोऽस्तुते ॥ २९॥

भक्तप्रियाय वीराय वीरभद्राय ते नमः ।
स्वभक्तजनपालाय भक्तोद्यानविहारिणे ॥ ३०॥

दिव्यमालासुभूषाय दिव्यगन्धानुलेपिने ।
श्रीप्रसन्नप्रसन्नाय सर्वसिद्धिप्रदोभव ॥ ३१॥

वातात्मजमिदं स्तोत्रं पवित्रं यः पठेन्नरः । वातसूनोरिदं
अचलां श्रियमाप्नोति पुत्रपौत्रादिवृद्धिदम् ॥ ३२॥

धनधान्यसमृद्धिं च आरोग्यं पुष्टिवर्धनम् ।
बन्धमोक्षकरं शीघ्रं लभते वाञ्छितं फलम् ॥ ३३॥

राज्यदं राजसन्मानं सङ्ग्रामे जयवर्धनम् ।
सुप्रसन्नो हनुमान्मे यशःश्री जयकारकः ॥ ३४॥

॥ इति श्रीपराशरसंहितायै पराशरमैत्रेयसंवादे

हनुमत्स्तवराजः सम्पूर्णः ॥

# श्रीहनुमत्स्तवराजः

हनुमत्कल्पे

श्रीगणेशाय नमः ।

हनुमानुवाच ।

तिरश्चामपि यो राजा समवायं समीयुषाम् ।

तथा सुग्रीवमुख्यानां यस्तं वन्द्यं नमाम्यहम् ॥ १॥

सकृदेव प्रसन्नाय विशिष्टायैव राज्यदः ।

विभीषणाय यो देवस्तं वीरं प्रणमाम्यहम् ॥ २॥

यो महापुरुषो व्यापी महाब्धौ कृतसेतुकः ।

स्तुतो येन जटायुश्च महाविष्णुं नमाम्यहम् ॥ ३॥

तेजसाप्यायिता यस्य ज्वलन्ति ज्वलनादयः ।

प्रकाशते स्वतन्त्रो यस्तं ज्वलन्तं नमाम्यहम् ॥ ४॥

सर्वतोमुखता येन लीलया दर्शिता रणे ।

राक्षसेश्वरयोधानां तं वन्दे सर्वतोमुखम् ॥ ५॥

नृभावं तु प्रपन्नानां हिनस्ति च सदा रुजम् ।

नृसिंहतनुमप्राप्तो यस्तं नृसिंहं नमाम्यहम् ॥ ६॥

यस्माद्विभ्यति वातार्कज्वलनेन्द्राः समृत्यवः ।

भयं तनोति पापानां भीषणं तं नमाम्यहम् ॥ ७॥

परस्य योग्यतां वीक्ष्य हरते पापसन्ततिम् ।
पुरस्य योग्यतां वीक्ष्य तं भद्रं प्रणमाम्यहम् ॥ ८ ॥

यो मृत्युं निजदासानां मारयत्यतिचेष्टदः ।
तत्रापि निजदासार्थं मृत्युमृत्युं नमाम्यहम् ॥ ९ ॥

यत्पादपद्मप्रणतो भवत्युत्तमपुरुषः ।
तमीशं सर्वदेवानां नमनीयं नमाम्यहम् ॥ १० ॥

आत्मभावं समुत्क्षिप्य दास्यं चैव रघुत्तमम् ।
भजेऽहं प्रत्यहं रामं ससीतं सहलक्ष्मणम् ॥ ११ ॥

नित्यं श्रीरामभक्तस्य किङ्करा यमकिङ्कराः ।
शिववत्यो दिशस्तस्य सिद्धयस्तस्य दासिकाः ॥ १२ ॥

इदं हनुमता प्रोक्तं मन्त्रराजात्मकं स्तवम् ।
पठेदनुदिनं यस्तु स रामे भक्तिमान्भवेत् ॥ १३ ॥

॥ इति हनुमत्कल्पे श्रीहनुमन्मन्त्रराजात्मकस्तवराजः सम्पूर्णम् ॥